न्नाभिसन्धत्ते द्विस्थापयति नाश्रितान् । द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते' इति । कमलेक्षणं तद्वत् प्रसन्नोज्ज्वलनेत्रम् ॥२९॥

**आदित्यरविमीशानं घृणिं सूर्यमनामयम् ।**
**आनन्दरूपिणं सौम्यं राघवं करुणामयम् ॥३०॥**

जो सूर्य के भी प्रकाशरूप सूर्य हैं एवं ईशान सभी के नियन्ता हैं तथा घृणि यानी अति प्रकाशमान हैं और सूर्यरूप विभूतिवाले एवं अनामय अविद्या आदि सभी दोषों से रहित हैं तथा सभी साधकों को आनन्द प्रदान करनेवाले हैं एवं सौम्य सूशीव हैं तथा रघुवंश में अवतीर्ण हुये करुणामय श्रीरामजी को सादर नमन करता हूँ ॥३०॥

आदित्यरविमिति आदित्यस्य प्रकाशस्यापि रविं प्रकांशकम् उपलक्षणमिदं चन्द्रादेः । श्रुतिश्च 'न तत्र सूर्योभाति न चन्द्रतारके नेमा विद्युतो भान्ति कुतोऽय मग्निः । तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति' इति । घृणिं द्युतिरूपं येन द्युतिमतां सूर्यादीनां द्युतिमत्वं 'किरणोऽस्त्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । सूर्यं विभूतिकं ज्योतिषां रविरंशुमानित्युक्तेः । अनामयं न आमयो अविद्या रागो यतस्तं अविद्यानिवारकमित्यर्थः । आनन्दरूपिणं सूखात्मकविग्रहन्तं सौम्यं सुशीलं यदुक्तं 'स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः' इति करुणामयं कृपामयमूर्तिं कृपैव रामरूपेण आविरभूदितिभावः । यदुक्तं 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः । उत्सवेषु च सर्वेषु पितेव परितुष्यति' इति । निर्निमित्तपरदुःख प्रहाणेच्छाखलु करुणेत्युच्यते ॥३०॥

**जामदग्नितपोमूर्तिं रामं परशुधारिणम् ।**
**वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ॥३१॥**

जो जमदग्निरूप तपस्या के मूर्तिस्वरूप सर्वदा परशु को धारण करनेवाले परशुरामरूप श्रीरामजी हैं एवं वाणी सरस्वती के पति हैं तथा साधकों को इच्छित वरदान देनेवाले हैं, और वाच्य यानी वेद उपनिषद् धर्म इतिहास प्रभृति सभी शास्त्रों के एकमात्र लक्ष्यभूत तत्त्व या प्रकाशक हैं, तथा श्रीपद से कथित श्रीसीताजी या लक्ष्मीजी के पति हैं, और पक्षि गरुज या पुष्पक वाहन वाले हैं ऐसे सर्वेश्वर श्रीरामचन्द्रजी को सतत प्रणाम है ॥३१॥

अथावेशावताररूपं प्रणमति जन्मदग्नीत्यर्धेन जमदग्नेर्यत्तपः सैव मूर्तिर्यस्य

तं रामं परशुनामं सतः यच्छक्त्यावेशात्परशुरामस्य भगवत्वं वह्न्याविष्टस्यायः पिण्ड स्य वह्नित्ववत् मन्यन्ते । आकृष्टायां तु शक्तौ तस्य ब्रह्मर्षित्वमेवावशिष्टं परमव्योमाधि पतिरूपं प्रणमति वाक्यमित्येके वाक्पतिं सरस्वतीनायकं वरदं अभिष्टपूरकं वाच्यम् वेदेनाभिधेयं 'राम एव परं ब्रह्म राम एव परं तपः । राम एव परं तत्वं श्रीरामो ब्रह्मतारकम्' रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परब्रह्मा भिधीयते' नारायणं महाज्ञेयमित्यादिश्रुतेः । यद् वाचानभ्युदित इत्यादिकं तु कार्त्स्न्ये नावाच्यतां गमयति । इतरथा औपनिषदः पुरुष इत्यादिश्रुतिव्याकोपापत्तिः । यतः कार्त्स्न्येन वक्तुं न शक्यते अतस्तदवाच्यमिति व्यवह्यते । नतदीदृगिति ज्ञेय न वाच्यं न च तर्क्यते । पश्यन्तोऽपि न पश्यन्ति मोहरूपं विपश्चितः' इति स्मृतेः । श्रीपतिं श्री सीतापतिम् लक्ष्मीनायकमिति वा पक्षिवाहनं गरुडवाहनम् ॥३१॥

**श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहम् ।**
**हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥३२॥**

जो श्रीरामजी शार्ङ्ग नामक धनुष को धारण करनेवाले हैं एवं श्रीदशरथ पुत्ररूप में अवतीर्ण होकर श्रीराम इसी नाम से प्रसिद्ध हैं, तथा चिन्मय एवं आनन्दमय विग्रह वाले हैं और हल को शस्त्र के रूपमें धारण करने वाले हैं, तथा सर्वव्यापक हैं एवं सवों के ईश्वर हैं और कृपा के सागर हैं तथा अत्यन्त बलवाले हैं ऐसे श्रीरामचन्द्रजी को सादर प्रणिपात करता हूँ ॥३२॥

श्रीशार्ङ्गेति-**शोभमानशार्ङ्गं कार्मुकमित्यर्थः । चिन्मयेति स्वप्रकाशसुखधन मूर्तिमित्यर्थः संकर्षणरूपत्वमाह हलधृगिति द्वीतीयार्थे प्रथमा ॥३२॥**

**श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम् ।**
**मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥३३॥**

जो श्रीसीतजी के वल्लभ प्रिय पति हैं एवं कृपानाथ यानी अतिदयावाले हैं और मोहिनी रूप या बुद्ध आदि रूपों को धारण कर जगत को मोहित करनेवाले या अति कमनीय विग्रह होनेसे श्रीरामरूप से संसार को मोहित करनेवाले तथा अच्युत यानी धर्म रक्षण या शरणापन्न जीवों के रक्षण कार्यों में कभी भी च्युत न होनेवाले एवं **'सर्वेषाम वताराणामवतारी रघूत्तमः'** इस आगम वचनानुसार मत्स्य कूर्म बराह नरसिंह प्रभृति अनेक रूपों को धारण करनेवाले हैं तथापि कभी विकार को प्राप्त न होनेवाले अव्ययरूप

श्रीरामचन्द्रजी को प्रणाम करता हूँ ॥३३॥

कारणार्णवशय्यादिरूपत्वमाह श्रीवल्लभमित्यर्धेन । श्रीवल्लभं श्रियास्वानन्यरूपायाः श्रीसीतायावल्लभं 'अनन्या च मया सीता' इतिमहर्ष्युक्तेः । श्रीवल्लभमित्युक्ते सहिनित्यलक्ष्मीवानिति प्रतीयते । कृपानाथं करुणावन्तं स खलु परमदयालुः स्वस्मिन् विलीनानामनुशायिनामभ्युदयादिप्रापणाय विलयान्ते प्रकृतिं प्रेक्ष्य ततो महरादिमुत्पाद्य तेनाण्डं जनयित्वा तद् गर्भोदके शयानोऽण्डमन्तर्नियमयति क्षीराम्बुधौ च शयानस्तत्परिपालयतीति श्रीराम एव तत्तदात्मको भवतीति ज्ञेयम्। जगन्मोहनं तत्रैव विमुखान् मायया मोहयन्तम् अच्युतमेतादृशेऽपि व्यापारे सति अप्रच्युतसामर्थ्यमित्यर्थः । अथ विभवापरपर्य्यायलीलावताररूपं प्रणमति मत्स्येत्यर्धेन । अव्ययमिति नहि पूर्वरूपोपमर्देन रूपान्तरस्वीकारः ताद्रूप्येणस्थित एव तस्मिन् रूपान्तराविर्भावात् । एतदुक्तं भवति श्रीरामचन्द्रो भगवान् मूलतत्वं देवादिभक्तकार्यवशात् स्वयमाविर्भवति स्वस्मिन्नेव कदाचिन्मत्स्यादिरूपाणि च प्रत्यापयति वैदूर्यमणिरिव रूपान्तराणि नहि तस्मादन्यन्मत्स्यादि 'यो ह वै श्रीरामचन्द्रः स भगवान् यः मत्स्यकूर्माद्यवताराः भूर्भुवः स्वः तस्मै वै नमो नमः' इतिश्रीरामतापनीयवाक्यात् 'सर्वेषामवताराणामवतारीरघूत्तमः' इस्याद्यागमोक्तेः-

'परिपूर्णतमं ब्रह्मकलेशः क्लेशवर्जितः ।
अंशीसर्वावतारी च सर्वेशः श्रुतिदर्शितः
वासुदेवादिमूर्त्तीनां चतुर्णां कारणं परम् ।
चतुर्विंशतिमूर्त्तीनामाश्रयः शरणं मम'

इत्यादिरूपेणाचार्यपरमाचार्यवर्यैः प्रतिपादितत्वाच्च । सर्वाणि च रूपाणि सनातनानि सर्वगुणवन्तीति मन्तव्यम् । सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः । हानोपादानरहिता नैव प्रकृतिजाः क्वचित् । परमानन्दसंदोहा ज्ञानमात्राश्च सर्वतः । सर्वे सर्वगुणैः पूर्णाः सर्वदोषविर्वजिता' इति महावाराहवाक्यात् । न च पूर्वपश्चाद्भावेनानित्यत्वं क्वचिच्छक्यमेकस्मिन्नेव वस्तुनि श्रीरामे वैदूर्यमणाविवमत्स्यादिरूपाणां यौगपद्य सिद्धिसत्वात् । स्मृतिश्चैवमाह-

'मणिर्यथा विभागेन नीलपीतादिभिर्युतः ।
रूपभेदमवाप्नोति ध्यानभेदात्तथाच्युतः' इति ।

मणिरत्नं वैडूर्यं किञ्च यद्यपि सर्वगुणकृता सर्वत्र पूर्तिरविशेषा तथापि यत्र

लोकैस्ते सर्वे गुणा प्रतीयन्ते तान्पूर्णान् वदन्ति तथा नृसिंहरामकृष्णान् यदुक्तं-नृसिंह रामकृष्णोषु षाड्गुण्यं परिपूरितमिति । यत्र ते स्वरूपे सन्तोऽपि कार्याभावान्ना विर्भवन्ति । ततो लोकैर्न प्रतीयन्ते । तास्तु कला अंशाश्चेतिद्विधा तथा व्यासादीन् मत्स्यादींश्च यथैक एव सर्वशास्त्रवित् क्वचित् सर्वशास्त्रोद्ग्राही सर्वज्ञः कथ्यते क्वचित्तु स एव द्वयेकशास्त्रोद्ग्राहीज्ञ उच्यते सर्वशास्त्रैकदेशोद्ग्राही च सर्वज्ञसदृश इति तथा तद् द्रष्टव्यम् ॥३३॥

**वासुदेवं जगद्योनिमनादिनिधनं हरिम् ।**

**गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम् ॥३४॥**

जो वासुदेव यानी सब जगह वास करनेवाले हैं एवं जगत् के योनि कारण हैं तथा उत्पत्ति एवं विनाश से रहित हैं और हरि अर्थात् अपने से उत्पन्न संसार को अपने में ही संहार करनेवाले हैं तथा गोविन्द यानी इन्द्रियगण को नियन्त्रण करनेवाले या वेदादि शास्त्रों से जाने जानेवाले हैं तथैव गोपति वेदों के रक्षक या इन्द्रियों के स्वामी हैं और सर्वव्यापक एवं गोपिजनों के मन को हरण करनेवाले ऐसे सर्व मनोहरी श्रीरामजी को नमस्कार करता हूँ ॥३४॥

पूर्णरूपत्वं विज्ञापयन् श्रीरामं विशिनष्टि वासुदेवमित्यर्धेन । वसति सर्वत्रेति वासुः उण् प्रत्ययः । दीव्यतीति देवः श्रीसाकेतवैकुण्ठादिषु नानाविधेषु दिव्येषु धामसु नित्यं निवसन् क्रीडति दीव्यते च यस्तमित्यर्थः ।

जगद्योनिं विश्वस्य कराणं चिदचिद्वस्तुशरीरकात् श्रीरामादेव जगदुत्पत्तेस्तथा च श्रीरामतापिन्यां श्रूयते-

यथैव बटबीजस्थः प्राकृतश्च महाद्रुमः ।

तथैव रामबीजस्थं जगदेतच्चराचरम् ।

इति अनादिनिधनं नित्यत्वादुत्पत्तिविनाशशून्यं सत्त्वे सत्यकारणत्वं हि नित्यत्वं हरिं स्वस्मादुत्पन्नस्य प्रधानादिप्रपञ्चस्य स्वस्मिन्नेन संहारकम् । सर्वावता रित्वात् श्रीरामं गोपलीलया विशिष्टं प्रणमति गोविन्दमित्यादिना सार्धद्वयेन गोविन्दं गोपालरूपेण गोषु क्रीडन्तमित्यर्थः । गोपतिं गवां स्वामिनं विष्णुं व्यापकं पद्मादीनां गोपकिशोरीणां सौन्दर्यस्मितेक्षणतृष्णया तासां गृहान् युगपत् प्रविशन्तमित्यर्थः । गोपीजनानां पद्मादीनां मनांसि हरन्तम् सौन्दर्यस्मितेक्षणनर्मालापादिभिः स्वासक्तानि

कुर्वन्तमित्यर्थः ॥३४॥

गोपालं गोपरिवारं गोपकन्या समावृतम् ।
विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम् ॥३५॥

जो गौपालन करनेवाले एवं गो परिवारवाले हैं तथा गोप कन्याओं से अच्छी तरह से सेवित हैं और विजली के समुह के समान कान्तिवाले हैं तथा कृष्ण यानी इन्द्रलीलमणि के समान श्याम प्रभावाले और चराचर संसारमय यानी संसार को उत्पन्न पालन एवं संहार करनेवाले सर्वेश्वर श्रीरामजी को सादर प्रणाम करता हूँ ॥३५॥

गोपालं मृदुलतृणपल्पवपर्णादिना गवां तोषकं गोपरिवारं गावः परिवारः यस्य तं गोप्रियमित्यर्थः । अथ दानलीलां सूचयन्नाह गोपकन्येति । एतदुक्तं भवति रक्षोविनाशफलके शत्रे नारदादिप्रेरणया दशरथेन प्रवर्तिते श्रीनारदोपदिष्टश्रीराम प्रीतिफलकं हविरर्पणं कर्तुं तत्र सश्रद्धं प्रयान्तिभिः पद्मादिभिः सह दत्तयूपमस्य हविः कलशचयस्यानर्ध्यं भूषगणस्यास्यदेवाङ्गनास्वप्यश्रुतचरस्य प्रत्येकयौवनभार स्य च परार्धसंख्या निषण्णानीति कलहायते ताभिश्चान्तः परितुष्टाभिरपि वहिः परुषवचनादिभिः कोपव्याजेनोत्तमितभ्रूलताभिस्तद्वेण्या कर्षणाय तत्सुखस्पर्शाय च समावृत्तो 'भवति । तं श्रीराममिति विद्युत् पुञ्जप्रतीकाशं शशीभूतसौदामनीतुल्या कान्तिमन्तमित्यर्थः । यथा कान्त्या श्यामलोऽपि दिशोवितिमिराः करोति । जानकी कान्तिसंक्रमाद् गौरमिति वा रामं कृष्णमिति व्याख्यातं प्राक् ॥३५॥

गोगोपिकासमाकीर्णं वेणुवादनतत्परम् ।
कामरूपं कलावन्तं कामिनीकामदं विभुम् ॥३६॥

जो गौ एवं गोपवालाओं से संवेष्टित हैं तथा वेणु वजाने में तत्पर एवं कामरूप तथा अनेक कलावाले और कामिनीयों के कामनाओं को पूर्ण करनेवाले सर्वव्यापक श्रीरामचन्द्रजी को सन्नति है ॥३६॥

गोभिर्गोपिकाभिश्च दोहनव्याजेनद्रष्टुमागताभिर्वेष्टितः । वेणुपादनतत्परश्च । कामरूपं मायया कृतकन्दर्पकलावन्तं गोगोपीतोषकनृत्यगीतादिवैदग्ध्यविशिष्टं कामिनीनां तदाश्लेषादिकामिनीनां तासां गोपीनां तदादिदानेनाभिलाषान्पूरयन्तं विभुं प्रतिगोपीगृहाविर्भाविनम् ॥३६॥

मन्मथं मथुरानाथं माधवं मकरध्वजम् ।

**श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् ॥३७॥**

जो अपनी चितवन से मन को क्षुब्ध करनेवाले हैं एवं मथुरा का पालन करनेवाले हैं और माधव-लक्ष्मीपति हैं तथा मकरध्वज यानी कन्दर्प स्वरूप और श्रीसीताजी को धारण करनेवाले अर्थात् **'अनन्या च मया सीता भास्करेण यथा प्रभा'** इस श्रीमद्रामायण वचनानुसार श्रीसीताजी को सतत हृदय में धारण कनरेवाले एवं श्रीधर यानी ऐश्वर्य का प्रशासक या प्रदायक हैं तथा श्रीश श्रीसीताजी के ईश स्वामी एवं श्रीनिवास श्रीसीताजी के निवास स्थान अथवा साधकों के इच्छानुसार श्रीसीताजी के साथ निवास करनेवाले परात्पर ब्रह्मादि देवताओं के उपास्य परब्रह्म श्रीरामचन्द्रजी को प्रणाम करता हूँ ॥३७॥

**मन्थमिति-स्मितवीक्षणादिना तासां मनांसि क्षोभयन्तमित्यर्थः । सहस्रनाम्नि मथुरानाथं मधुपुर्य्याः स्वामिनं शत्रुघ्नं द्वारपालायन्तमित्यर्थः । माधवं पद्मायाः पतिं श्रीधरं मकरध्वजं कन्दर्पस्वरूपम् । रेखारूपया श्रिया चिह्नितवक्षसं श्रीकरं महाराजोचितबहुविभूतिप्रकाशकं श्रीशं तत्तद्विभूतिनियामकं श्रीनिवासं स्थिरसत्तद्विभूतिकमित्यर्थः । 'परान्नारायाच्चैव कृष्णात्परतरादपि । यो वै परतमः श्रीमान् रामोदाशरथिस्वराट्' इत्यागमोक्तेः परात्परं सर्वेश्वरं श्रीराममितियावत् । अवतारकाले सर्वनृपसंवन्दितपादपीठत्वेन संस्तूयमानमिति वा ॥३७॥**

**भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम् ।**
**सर्वदुःखहरं वीरं दुष्टदानववैरिणम् ॥३८॥**

जो भूत प्राणिवर्ग के स्वामी हैं एवं भूभार को हरण कर उसका भरण-पोषण करनेवाले हैं तथैव भद्र मङ्गलरूप है और विभूति यानी अणिमादिकों द्वारा सेवित हैं और सभी ऐश्वर्यों के भूषणरूप तथा सभी प्रकार के दुःखों का अपहरण करनेवाले हैं यानी **'सर्वावताररूपेण दर्शनस्पर्शनादिभिः । दीनानुद्धरते यस्तु स रामः शरणं मम'** इस आगम वचनानुसार सभी अवतारों के कारण स्वरूप से दर्शन एवं स्पर्शन आदि से शरणापन्न दीनजनों का उद्धार करनेवाले शरणागतवत्सल हैं उन्हीं श्रीरामजी की शरणागति स्वीकारना चाहिये भवसागर तरने की इच्छावालों को ऐसा इसाका तात्पर्य है। वीर प्रदीप्त तेजवाले एवं दुष्ट दानवों को नाश करनेवाले वैरि के रूपमे प्रसिद्ध हैं ऐसे श्रीरामचन्द्रजी को सादर प्रणाम करता हूँ ॥३८॥

भूतेशमिति सर्वप्राणिप्रभुमित्यर्थः । भूपतिरक्षः कृतक्लेशतो भुवस्त्रातारं भद्रं मङ्गलात्मकं विभूतिं विशिष्टा भूतयो यस्य तं अणिमादिसिद्धिसेवितमित्यर्थः । भूतिभूषणं भूतीनां भूषणं यदनुग्रहात्तासां विभूतित्वमितिभावः । स्फुटमन्यत् ॥३८॥

श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम् ।
चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम् ॥३९॥

जो नृसिंहरूप धारण करनेवाले या नरों में सिंहरूप हैं एवं महान् बाहुवाले तथा श्रेष्ठ या पूजनीय हैं और प्रदीप्त प्रकृष्ट तेजवाले हैं तथा चिदानन्द स्वप्रकाश एवं आनन्दमय हैं और नित्य यानी सर्वदा एक रस रहनेवाले उत्पत्ति तथा विनाश रहित हैं तथा ओंकार स्वरूप हैं एवं 'सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः' इस श्रीमद्रामायण के वचनानुसार सूर्यादिकों का भी प्रकाशक सर्वज्योति स्वरूप हैं ऐसे श्रीरामचन्द्रजी को प्रणाम करता हूँ ॥३९॥

श्रीनृसिंहमिति श्रीयुक्तं पुरुषसिंहमित्यर्थः । महाबाहुमाजानुलम्बमानभुजं न्यग्रोधमण्डलत्वलक्षणलक्षितमित्यर्थः । महान्तं स्ववर्गमुख्यं दीप्ततेजसं दुर्धर्षप्रतापं चिदानन्दमयं प्रचुरज्ञानसुखवपुषं प्राचुर्ये मयट् न चात्र दुःखांशसद्भावः । प्रकृत्यर्थभूम्नस्त्वेन विलक्षणात् दुःखांशस्तु तत्र नैवास्ति 'एष आत्मापहतपाप्मा' परः पराणां सकलानयत्र क्लेशादयः सन्ति परावरेशे' इत्यादिश्रुतिस्मृतिभ्यः प्रणवमोंकाररूपं ज्योतीरूपिणमादित्यादिप्रकाशकं ह्रस्वत्वमार्षम् ॥३९॥

आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम् ।
भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥४०॥

जो आदित्य मण्डल में विराजमान हैं एवं निश्चित वेदादि शास्त्र सिद्धान्त स्वरूप से नियत किये गये स्वरूपवाले हैं तथा भक्तों के प्रिय हैं और कमल के समान नेत्रवाले हैं एवं साधक भक्तों के इच्छित पदार्थों को प्रदान करनेवाले हैं ऐसे श्रीरामचन्द्रजी को सादर प्रणाम करता हूँ ॥४०॥

आदित्येति व्याख्यातं प्राक् । निश्चितेति निश्चितं मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः, सर्वगन्धः, सर्वरसः सर्वमिदमभ्यात्तो वाक्यनादरः' इतिछान्दोग्यश्रुतिसिद्धमर्थस्वरूपं परमार्थभूतं भोग्यभोगोपकरणभोगस्थानं तदस्यास्तीति तं प्राशस्त्ये नित्ययोगे वा मतुप् स्फूटमन्यत् ॥४०॥

**कौसलेयं कलामूर्तिं काकुत्स्थं कमलाप्रियम् ।**
**सिंहासने समासीनं नित्यव्रतमकल्मषम् ॥४१॥**

जो अयोध्या के अधिपति हैं एवं समस्त कलाओं के मूर्ति हैं और ककुत्स्थ वंश में प्रादुर्भूत तथा कमला के प्रिय हैं एवं दिव्य रत्नसिंहासन में विराजमान हैं और धर्माचरण परायणों में सदा सावधान रहनेवाले हैं तथा दम्भप्रभृति पापादि दोषों से रहित हैं ऐसे श्रीरामजी को प्रणाम करता हूँ ॥४१॥

कौसलेयमिति **कौसलाया अयोध्याया अधीश्वरमित्यर्थः । कलाश्चतुःषष्टिस्ता मूर्तिर्यस्य तं तास्वतिप्रवीणमित्यर्थः । काकुत्स्थं ककुत्स्थवंशभवं नित्यव्रतमवाधि तधर्माचारनियममतोऽकल्मषं निर्दोषं पञ्चमी बहुव्रीहिः स्मृतिमात्रेण कीर्तनेन च दुरित निवर्त्तकमित्यर्थः ॥४१॥**

**विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम् ।**
**यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥४२॥**

जो श्रीविश्वामित्रजी के प्रिय हैं एवं जितेन्द्रिय हैं और अपनी भार्या श्रीसीताजी में ही नियत रूपसे भोगादिव्रत निष्ठावाले यानी स्वपरिणिता श्रीसीतातिरिक्त स्त्री के साथ विलास नहीं करनेवाले एक पत्निव्रतवाले हैं तथा यज्ञ के स्वामी एवं यज्ञपुरुष यानी यज्ञों से समाराधीन हैं और यज्ञों के पालन में तत्पर हैं ऐसे श्रीरामचन्द्रजी को नमन करता हूँ ॥४२॥

वीश्वामित्रप्रियमिति **तत्पुरुषो बहुव्रीहिर्वा स्वदारेति स्वस्त्रीष्वेव नियतो नित्यभोगनिष्ठा यस्य तं श्रीरामं यज्ञेशं यज्ञे पूज्यं यज्ञपुरुषं यज्ञात्मकं पुरुषम् । यज्ञपालने यज्ञनाशकदुष्टेभ्यः संरक्षणे तत्परम् ॥४२॥**

**सत्यसन्धं जितक्रोधं शरणागतवत्सलम् ।**
**सर्वक्लेशापहरणं विभीषणवरप्रदम् ॥४३॥**

जो सत्यप्रतिज्ञावाले हैं एवं क्रोध को जितनेवाले हैं तथा शरण में आये सभी प्राणियों को वात्सल्यभाव से संरक्षण प्रदान करनेवाले हैं और अविद्या अस्मिता राग द्वेष अभिनिवेशरूप सभी क्लेशों का अपहरण नाश करनेवाले हैं तथा विभीषणजी को सर्वाभयप्रद वरदान देनेवाले श्रीरामजी को सादर प्रणाम है ॥४३॥

सत्येति अखण्डितप्रतिज्ञमित्यर्थः । यदुक्तं स्वयमेव

तद्देवि ? वचनं ब्रूहि राज्ञो यदभिकांक्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥ इति ॥

अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणम् ।
नहि प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥

इति च जितक्रोधमिति । प्रसह्य क्रोधो नास्ति स्वनिदेशातिवर्तिन्यविनीते तु तस्या तिक्रोधोस्यादेव यथाभ्यर्थनयापि मार्गमदातरि समुद्रे । शरणेति यदाह स्वयमेव

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं मम ॥ इति ॥

तद् वात्सल्यस्थानमुदाहरणं विशिनष्टि विभीषणेति यदाह स्वयमेव

अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् ।
राजानं त्वां करिष्यामि सत्यमेतद् ब्रवीमि ते ॥

रसातलं वा प्रविशेत् पातालं वापि रावणः ।
पितामहशकाशं वा न मे जीवन् विमोक्षते ॥

अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् ।
अयोध्यां न प्रवेक्षामि त्रिभिस्तैर्भ्रातृभिः शपे ॥'

इति स्फुटमन्यत् ॥४३॥

**दशग्रीवहरं रुद्रं केशवं केशिमर्दनम् ।**
**वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ॥४४॥**

जो दशमस्तकवाले रावण का वध करनेवाले हैं एवं रुद्रस्वरूप हैं तथा ब्रह्मा विष्णु एवं शिवजी को सृष्टि पालन तथा संहार कार्यों के लिये शक्ति प्रदान करनेवाले हैं और केशिदैत्य का वध करनेवाले हैं एवं वालि का वध करनेवाले वीर हैं तथा सुग्रीव से अभिलषित राज्य को प्रदान करनेवाले हैं ऐसे श्रीराघवेन्द्रजी को सादर प्रणाम करता हूँ ॥४४॥

दशेति रावणशिरच्छेत्तारमित्यर्थः । रुद्रंतच्छिरच्छेदकाले क्रोधाविष्टमित्यर्थः केशवं प्रशस्तंकुन्तलवन्तं केशिमर्दनं रामगोपाललीलायां केशिसंज्ञासुरनाशकं स्फुट

मेतदादिरामायणादौ ॥४४॥

**नरवानरदेवैश्च सेवितं हनुमत्प्रियम् ।**
**शुद्धं सूक्ष्मं परंशान्तं तारकं ब्रह्मरूपिणम् ॥४५॥**

जो श्रीरामजी मनुष्य वन्दर एवं देवताओं से सदा सेवित हैं एवं श्रीहनुमानजी के अतिप्रिय हैं तथा प्रकृति के गुणों से रहित शुद्ध स्वरूप एवं सुक्ष्म यानी सामान्यतया दुर्वोध हैं तथा परम शान्त स्वरूप यानी आनन्दरूप हैं और तारक अर्थात् साधकों को सायुज्य मुक्ति प्रदान करनेवाले ब्रह्मरूप हैं । ऐसे श्रीरघुवरजी को प्रणाम है ॥४५॥

नरवानरेति **शुद्धं प्रकृतिलेपरहितं सूक्ष्मं दुर्वोधं परं सर्वेभ्यः श्रेष्ठं तारकं मुक्तिपदं ब्रह्मरूपिणं ब्रह्मात्मकं बृहद्गुणयोगिरूपं विद्यते यस्य तमिति । नित्ययोगेमतुबर्थः । भगवद् विग्रहः खल्वपृथक् सिद्धविशेषणं भवति श्रीरामतापन्यामर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रह इत्युक्तम् । विग्रहस्य बृहद्गुणयोगाद् । ब्रह्मशब्द वाच्यत्वं तु अथ कस्मादुच्यते ब्रह्मेति बृहतोह्यस्मिन् गुणा इति श्रौतनिर्वचनात् । अन्यत् स्फुटार्थः ॥४५॥**

**सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम् ।**
**सर्वकारणकर्तारं निदानं प्रकृतेः परम् ॥४६॥**

जो पृथिवी आकाश आदि सभी भूतवर्ग के आत्मा के रूपमें रहनेवाले हैं एवं सम्पूर्ण चराचर वस्तु के आधार तथा सनातन यानी सर्वदा एकरूप से रहनेवाले हैं और सभी के कारणभूत प्रधानादि के कर्ता एवं आदि कारण हैं तथा प्रकृति से पर हैं ऐसे श्रीरामजी को नमस्कार करता हूँ ॥४६॥

सर्वभूतेति **सर्वेषां वियदादीनां भूतानामात्मभूतश्चासावात्मस्थश्चेति तं भूतोपादानत्वात् जीवान्तर्यामित्वाच्च सर्वाधारं सर्वेषां चिदचिद् वस्तुनामाश्रयं 'तस्मिन्नेवाश्रिताः सर्वे तदुनात्येति कश्चनेति श्रवणात् सनातनं तदात्मना नित्यं सर्वेषां कारणादीनां प्रधानादीनां कर्त्तारं तेषां परिणामे निमित्तं निदानं आदिकारणं नमः शब्दित सूक्ष्मशक्तिशरीरकात् श्रीरामादेवप्रधानोत्पत्तिश्रवणात् प्रधानात् पुनर्महदादिद्वारा विश्वोत्पत्तिः । तदाहुः 'किं तदासीत् तस्मै स होवाच सन्नासन्न सदसदिति तस्मात्तमः संजायत' इत्यादिसुबालश्रुतेः । इत्थमेव भगवान् बादरायणो निर्णिनाय 'ज्योतिरूपक्रमात्तु तथा ह्यधीयत एके' इति । प्रकृतेः परं प्रकृतिलेपरहितविशेष्यकमित्यर्थः ।**

'आदित्यवर्णं तमसः परस्तादिति पुरुषसूक्तम् ॥४६॥

निरामयं निराभासं निरवद्यं निरञ्जनम् ।
नित्यानन्दं निराकारमद्वैतं तमसः परम् ॥४७॥

सर्वेश श्रीरामजी जन्म एवं मृत्युरूप महारोग को निवारण करनेवाले हैं एवं निराभास यानी प्रतिबिम्ब के भास से रहित हैं और सभी प्रकार के रोगों से रहित हैं तथा अज्ञान से रहित हैं एवं नित्य आनन्द गुणों से युक्त हैं और निराकार यानी प्राकृतिक आकारों से रहित तथा दिव्य मङ्गलरूपवाले हैं एवं अद्वैत यानी अपने समान दूसरों से रहित या चिदचिद् रूपसे विशिष्ट युक्त होने से कारण एवं कार्य रूपापन्नतया अवस्थित और तम प्रधानादि से पर यानी प्रधान वर्गों के कारण होते हुये भी उनके गुण दोषों से सर्वथा पर अस्पृष्टतया रहनेवाले श्रीरघुराजजी को अनेकश सादर नमस्कार है ॥४७॥

निरामयमिति । पञ्चम्यन्तपदार्थस्य बहुव्रीहेराश्रयणादामयं संसाररोगं निवारयति यस्तथाभूतमित्यर्थः । निर्गत आमयो यस्मात् तमिति विग्रहः । निराभासम् आभासः प्रतिबिम्बस्तस्मान्निर्गतं प्रतिबिम्बभारहितमित्यर्थः । जलादावाकाशमिव मायोपाधौ प्रतिबिम्बितं चिन्मात्रं सर्वेश्वरपदवाच्यं सर्वोपादाननिमित्तं स्यादित्यज्ञाः कल्पयन्ति । तदनेन निरस्तं नहि व्यापकस्य निरूपस्य प्रतिबिम्बं संभवति । निरवद्यं निर्दोषं यतो निरञ्जनं प्रकृतिलेपरहितं नित्यानन्दम् अपृथक् सिद्धानन्दादिगुणगणमित्यर्थः । निराकारं प्राकृताकारान्निर्गतं स्वरूपं यस्य व्यापकत्वेन चतुर्भुजाद्याकारान्निर्गतमिति वा आकार इह विराट् रूपमुच्यते । तस्माद् वैलक्षण्यं किल ततो निर्गतिः । अद्वैतं चिदचिद् विशिष्टस्वरूपत्वात् तमसः परं विशेष्येण स्वरूपेण नित्यविभूतिस्थम् ॥४७॥

परात्परतरं तत्त्वं सत्यानन्दं चिदात्मकम् ।
मनसा शिरसा नित्यं प्रणमामि रघूत्तमम् ॥४८॥

जो श्रीरामजी पर शब्द से कथित संसार के कारण प्रधानादि से पर एवं नित्यमुक्त जीव समूहों से भी अतिशय पर रूपसे स्थित धर्म काम एवं मोक्षरूप परम पुरुषार्थ प्रदाता परतत्त्वरूप हैं और सत्य एवं आनन्द स्वरूप-सर्वदा एक रूपवाले हैं तथा चिदचिदात्मक यानी सभी के प्रकाशक स्वयं प्रकाश्य स्वरूपवाले हैं ऐसे सर्वमय रघुकुल शिरोमणि सर्वेश्वर श्रीरामजी को मनसे एवं शिरसे यानी कायिक वाचिक तथा मानसिक

रूपसे नित्य प्रणाम करता हूँ ॥४८॥

परात्परतरमिति **प्रधानादिकारणत्वात्तमस्तत्वं परमुच्यते तस्मात्परं नित्यमुक्त जीववृन्दं तदतिक्रमणात् तस्मादपि परं तस्याप्युपास्यं श्रीरामतत्त्वं परमपुरुषार्थ भूतमिति पूर्वत्रहेतुस्तदेवाह सत्यानन्दं चिदात्मकमिति सत्यस्त्रिकालसिद्धो न तु विष यनिषेवया कदाचिदुपजात आनन्दो यस्य तं चिदात्मकं स्वस्मै स्वयं प्रकाशमानस्वरू पमिति परमपुरुषार्थत्वं व्यक्तम्** । ईदृशं रघूत्तमं मनसा वचसा नित्यं प्रणमसि ॥४८॥

**सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् ।**

**नमामि पुण्डरीकाक्षममेयं गुरुतत्परम् ॥४९॥**

जो सूर्यमण्डल के मध्य में अपने से अभिन्न स्वरूपा सर्वेश्वरी श्रीसीताजी के साथ विराजमान हैं एवं कमल के समान उज्ज्वल कर्ण पर्यन्त दीर्घ नेत्रवाले है और अमेय यानी देश काल एवं वस्तु रूप तीन प्रकार के परिच्छेद रहित हैं या सामान्य ज्ञान के अविषय हैं तथा गुरुतत्पर हैं अर्थात् श्रीवशिष्ठ प्रभृति गुरुजनों के आज्ञा पालन में सदा तत्पर रहते हैं ऐसे सर्वेश श्रीरामजी को सादर नमस्कार करता हूँ ॥४९॥

सूर्यमण्डलेति **पूर्ववत्सीतया श्रीजानकीदेव्या सम्यक् नित्यमनुनिरन्तरमितं युक्तं पुण्डरीकाक्षं प्रसन्नोज्ज्वलाकर्णायतनेत्रम् अमेयमपरिछेद्यस्वरूपगुणलील मित्यर्थः । गुरुतत्परं वशिष्ठादिपूज्यवर्गभक्तिपरायणम् ईदृशं रामं नमामीति युग्मोपासनं व्यञ्जितम्** ॥४९॥

**नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः ।**

**नमोऽस्तु रामदेवाय जगदानन्दरूपिणे ॥५०॥**

जो समस्त भूतवर्ग में निवास करनेवाले एवं सूर्यादिकों को नियन्त्रित करने यानी प्रकाशित करनेवाले हैं ऐसे श्रीरामचन्द्रजी को नमस्कार है । तथा जगत् को सर्वदा आनन्द प्रदान करनेवाले और अपने अनन्त गुणों एवं रूप तथा उदारता के कारण सभी के चित्त में सदा रमण करनेवाले सृष्टि स्थिति एवं संहार के मूल कारण श्रीरामचनद्रजी को सादर नमस्कार है ॥५०॥

नमोस्त्विति **वासुदेवायेति पूर्ववत् ज्योतिषां पतये सूर्यादीनां नियन्त्रे राम देवाय रामोभक्तचित्तरमणस्थानभूतः देवः सर्वाराध्यः विचित्रक्रीडापरः स्तवनीयश्च तस्मै जगदानन्दरूपिणे सर्वानन्दहेतवे 'एष एवानन्दयति' इति श्रवणात्** ॥५०॥

नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने ।
मायामयनिरस्ताय प्रपन्नजनसेविने ॥५१॥

जो वेदान्त में निष्ठा रखनेवाले या वेद के अन्तभाग से प्रतिपाद्य अथवा वेदान्त से ही जाने जाते हैं एवं योगि यानी चित्तवृत्ति को विषयों से निवृत्त कर आत्मा में रमणशील साधकों से साक्षात् किये जानेवाले तथा छओं अंगों के सहित वेद के उपदेशक या प्रवर्तन करनेवाले और माया एवं मायिक समस्त वस्तुओं से सर्वताभाव से पृथक् या निर्लिप्त रहनेवाले एवं शरणागतजनों द्वारा समाराधनीय हैं ऐसे सर्वेश श्रीरामजी को नमस्कार है ॥५१॥

नमो वेदान्तेति वदान्तेषु निष्ठा प्रतिपाद्यतया स्थितिर्यस्य तस्मै तद् वेद्याये त्यर्थः । 'वेदान्ते च प्रतिष्ठित' इति श्रुतेः । योगिने भक्तमैत्रीरसरसिकायेत्यर्थः । ब्रह्मवादिने साङ्गस्य सशिरस्कस्य ब्रह्मणो वेदस्य प्रवर्त्तकायेत्यर्थः । मायेति निरस्त मायामयाय आहिताग्न्यादिगणपाठान्निष्ठान्यस्य पूर्वप्रयोगानियमः प्रपन्नेति प्रपन्नजनकर्तृका सेवा विद्यते यस्य तस्मै तत्सेवा कांक्षिणे इतिभावः ॥५१॥

वन्दामहे महेशानं चण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥५२॥

जो शंकरजी के धनुष को तोडनेवाले हैं एवं परात्पर तत्त्व हैं और श्रीजानकीजी के हृदय को आनन्द एवं चन्दन के समान शीतल प्रदान करनेवाले तथा रघुवंशियों को आनन्द प्रदान करनेवाले हैं ऐसे रघुवंश भूषण श्रीरामचन्द्रजी को सर्वदा वन्दन करता हूँ॥५२॥

वन्दामहेति रघुनन्दनं वयं वन्दामहे अत्रैकवचनस्य बहुवचनं अस्मदो द्वयोश्चेति पाणिनि स्मरणात् । श्रीरामस्तुतिजनितहर्षनिर्भरादात्मनि बहुत्वमननाद् वा तथा कीदृशं चण्डस्य रुद्रस्य कोदण्डं धनुः खण्डयतीति तथा । ननु शिवस्येश्वरस्य धनुस्तेन कथं भक्तं तत्राह महेशानं सर्वेश्वरमनुस्यवेषेणापि तस्येश्वराभिमानिनेति क्रमः परममाधुर्यं पुस्णातीति । अत एव जानकीति जानकीहृदयस्य श्रीरामानुरागिणः किं भावीत्यनिष्टशंकासंतप्तस्य चन्दनं शैत्यकरं येनेदं शिवकार्मुकं भक्तुं शक्यं स एव मत्पुत्र्या वर इति जनकस्य राज्ञः पण आसीत्तस्माच्छंकोत्पत्तिः सुकुमारेण तेनेदं महत्कर्म कथं स्यादिति ॥५२॥

**उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय नः**
**कामाय प्रमदामनोहरगुणग्रामाय रामात्मने ।**
**योगारूढमनुनीन्द्रमानससरोहंसाय संसारवि-**
**ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥५३॥**

जो उज्ज्वल एवं विकसित कोमल श्याम कमल के सदृश श्याम वर्णवाले हैं और सभी प्रकार के कामनाओं के पूर्ण करनेवाले तथा युवतियों के मन को अपहरण करनेवाले गुणसमूहों से युक्त तथा श्रीजानकीजी में ही दत्तचित्तवाले हैं और योगारूढ यानी श्रीरामजी के ही प्रपत्तियोग में समारूढ-सदा विराजमान मुनिश्रेष्ठ श्रीसनत्कुमार एवं श्रीनारद आदि के मनरूप सरोवर के हंसस्वरूप और संसार को यानी जन्म एवं मृत्यु को सदा के लिये नाश करनेवाले तथा प्रदीप्त तेजवाले एवं रघुकुल के श्रेष्ठभूषण स्वरूप हैं ऐसे परपुरुष श्रीरामजी को हमलोगों का सदा का नमस्कार है यानी जन्म एवं मृत्यु के नाशक परपुरुष श्रीरामचन्द्रजी को हम सादर प्रणाम करते हैं ॥५३॥

**अथ रूपादिगुणानुद्दिशन् प्रणमति** उत्फुल्लेति **रामाय पुंसे नोऽस्माकं नमः प्रणतिरस्तु कीदृशाय उत्फुल्लं विकसितममलं निर्मलं मृदुलं यदुत्पलदलं नीलनीरजपत्रं तद्विश्यामस्तस्मै कामाय स्पृहणीयाय प्राकृतमन्मथाय वा अतः प्रमदानां प्रेममत्तानां युवतीनां मनोहरो गुणग्रामः स्मितप्रेक्षणनर्मालापक्रीडाकौशलादिर्यस्य तस्मै रामात्मने जानकीसंसक्तचित्ताय । योगारूढं श्रीरामविसयिकप्रेमभक्तियोगयुक्तं यन्मुनीन्द्राणां कुमारनारदादीनां मानसं मनस्तदेव सरः सरोवरं तस्मिन् हंसाय तद्वत् कृत सुखविहारायेत्यर्थः । संसारः स्वभक्त्युन्मुखानां प्राणिनां वासना तस्य विध्वंसाय छेदकाय स्फुरद्दीप्यमानमोजस्तच्छेदने बलं यस्य तस्मै रघुकुलोत्तंसाय शिरोभूषणायेत्यर्थः ॥५३॥**

**भवोद्भवं वेदविदोवरिष्ठमादित्यचन्द्रानिलसुप्रभावम् ।**
**सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः परस्तात् ॥५४॥**

जो संसार के कारणभूत प्रधान आदि को भी उत्पन्न करनेवाले परम कारणरूप हैं एवं वेद को जाननेवाले ब्रह्माजी से अतिश्रेष्ठ हैं और आदित्य चन्द्रमा एवं वायु प्रभृति को उन उनके कार्य सम्पादन के लिये सामर्थ्य प्रदान करनेवाले हैं, तथा सर्वात्मक यानी अभिन्न निमित्तोपादान रूपसे कारण अवस्था में सूक्ष्म चिदचित् रूपसे और कार्यावस्था

में स्थूल चिदचित् स्वरूप से सभी में ओत प्रोत रहनेवाले होने से सर्वगत स्वरूपवाले एवं तमस यानी प्रकृति-लीलाविभूति से पररूपेण विद्यमान अर्थात् नित्यविभूति में समवस्थित, हैं ऐसे सर्वेश्वर श्रीरामजी को सादर नमन करता हूँ ।।५४।।

**अथैश्वर्यमुद्दिशन् प्रणमति** भवोद्भवमिति **रामं नमामि कीदृशं भवत्यस्माज्ज गदितिभवः प्रधानं तस्याप्युद्भवं सर्वोपादानमिति तमः शब्दितसूक्ष्माच्चिच्छरीरात् श्रीरामात् प्रधानादेः प्रपञ्चस्योत्पत्तिरिति प्रागवोचामः । निमित्ततामाह वेदविदो विधेरपि वरिष्ठं तदनुग्रहात्तस्य जगत् स्त्रष्टृत्वमित्यर्थः । आदित्यादिषु शोभनः प्रभावो यस्य तं यदनुग्रहात्ते जगदधिकारिणः इत्यर्थः । सर्वात्मकं सर्वान्तर्यामिणं सर्वगतं सर्वव्यापकस्वरूपं यस्य तं अन्तर्बहिश्च जगद्व्याप्यस्थितमित्यर्थः । यच्च किञ्चित् जगत्सर्वमित्यादिश्रुतेः । तमसः प्रकृतेः परस्तात्परं विशेषात्मनेतिशेषः ।।५४।।**

**निरञ्जनं निःप्रतिमं निरीहं निराश्रयं निष्कलमप्रपञ्चम् ।**
**नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं राममहं भजामि ।।५५।।**

जो शुद्ध चित् स्वरूप होने से अज्ञान रहित हैं एवं अन्य सभी प्रकार के उपमा रहित हैं तथा चेष्टा रहित और आधार रहित यानी अपने लिये स्वयं ही आधार होने से अन्य आधार से रहित हैं एवं कला मुहूर्त आदि काल के गति से शून्य तथा प्रपञ्च रहित हैं और नित्य तीनों काल में एक स्वरूप से रहनेवाले हैं तथा अचल स्वरूप हैं एवं निर्विषय यानी प्रकृत विषयों से रहित स्वरूपवाले हैं ऐसे योगियों के अन्तःकरण में सदा रमणशील श्रीरामचन्द्रजी को मैं निरन्तर भजन-स्मरण करता हूँ ।।५५।।

**स्वरूपनिष्ठं स्वभावमुद्दिशन् प्रणमति** निरञ्जनमिति **निरञ्जनं शुद्धं चिदेकरस मिति यावन् । निष्प्रतिमं निरूपमं 'न यस्य प्रतिमा अस्तीति' श्रुतेः । निरीहं पुरुषार्थ प्रापकचेष्टा रहितं तेषां स्वतः सिद्धेरित्यर्थः । निराश्रयं निराधारं स्वमहिमाधारमि त्यर्थः । 'स भगवान् कस्मिन् प्रतिष्ठित इति स्वमहिम्नीति श्रुतेः । निष्कलं कलाः कलावयवास्ताभ्यो निर्गतं कालानधीनस्वरूपमित्यर्थः । कलामुहूर्त्तादिमयश्च कालो नयद्विभूतेः परिणामहेतुरिति स्मृतेः । अप्रपञ्चं प्रपञ्चयति भृत्यसेवामिति प्रपञ्चस्ता दृशो न भवतीत्यप्रपञ्चस्तमिति स्वल्पयापि सेवया तुष्यन्तमितिभावः । यदाह 'न स्मरत्यपकाराणां शतमप्यात्मवत्तया । कथंचिदुपकारेण कृतेनैकेन तुष्यति' इति नित्यंत्रिकालैकरसं ध्रुवमचलं विभूत्वात् निर्विषयं प्राकृतविषयव्यासंगशून्यं स्वरूपं यस्य तं निरन्तरं स्वभक्तविच्छेदवर्जितं भक्तजनैकप्रियमित्यर्थः ।।५५।।**

**भवाब्धिपोतं भरताग्रजं तं भक्तिप्रियं भानुकुलप्रदीपम् ।**
**भूतत्रिनाथं भुवनाधिपत्यं भजामि रामं भवरोगवैद्यम् ॥५६॥**

जो भव-संसार रूप समुद्र से पार उतारनेवाले नौका स्वरूप हैं तथा श्रीभरतजी से समाराश्रित उनके बडे भाई हैं एवं भक्तिमान साधकों के लिये प्रिय हैं और सूर्यकुल के सर्वश्रेष्ठ प्रकाशक हैं तथा प्राणियों के जाग्रत स्वप्न एवं सुषुप्ति तीनों अवस्था के संरक्षक हैं एवं तीनलोक चौदह भुवनों के एकमात्र अधिपति हैं और संसार रूप यानी जन्म मृत्यु स्वरूप महारोग को सदा के लिये दूर करनेवाले सायुज्यमुक्ति दाता वैद्य हैं ऐसे श्रीरामजी को भजता हूँ तात्पर्य यह कि जन्ममृत्यु छुडाकर सायुज्यमुक्ति देनेवाले सर्वेश्वर श्रीरामजी हैं अन्य नहीं अतः साधकों को श्रीरामशरणागति स्वीकार कर आत्म कल्याण करलेना चाहिये ॥५६॥

भवाब्धीति तं रामं **भजामीत्यन्वयः । कीदृशं भवाब्धेः संसारसिन्धोः पोतं नावं तारकमित्यर्थः । भरताग्रजं तज्ज्येष्ठं तद्भक्तिविषयमितियावत् । भूतत्रिनाथं भूतानां प्राणिना त्रिषु कालेषु नाथं स्वामिनं सर्वदा तद् रक्षकमित्यर्थः । यतो भूवनाधिपत्यं भूवने स्वाधिपत्यं स्वामित्वं यस्य तं सर्वेश्वरमित्यर्थः । भवरोगस्य संसारदुःखस्य वैद्यं विनाशकं भवाब्धिपोतमित्यतो विद्यमानात् संसारात् पारंनयतीति प्रतीतिर्भवरोगवैद्य मित्यनेन तत्सम्बन्धविनाशकारित्वमुच्यते यथासौ पुनर्नप्रतीयेत शेषं स्फुटम् ॥५६॥**

**सर्वाधिपत्यं समरंगधीरं सत्यं चिदानन्दमयस्वरूपम् ।**
**सत्यं शिवं शान्तमयं शरण्यं सनातनं राममहं भजामि ॥५७॥**

जो सर्वाधिपत्य यानी त्रिपादविभूति पर्यन्त एकाधिकार स्वामित्ववाले हैं एवं संग्राम भूमि में जानेवाले में अति धीर हैं तथा सर्वदा एक रूपसे रहनेवाले सत्य स्वरूप हैं और स्वप्रकाश एवं आनन्दमय स्वरूपवाले हैं एवं कल्याण के स्थान तथा शान्तिमय हैं और शरण्य सभी को शरण प्रदान करनेवाले अनादि स्वरूप हैं ऐसे श्रीरामचन्द्रजी का मैं सदा भजन करता हूँ ॥५७॥

सर्वाधिपत्यमिति **सर्वेषामाधिपत्यं प्रभुत्वं यस्य तं सर्वप्रभुमित्यर्थः । समरङ्गधीरं सममशब्दोऽत्र सर्वपर्य्यायः समेषु सर्वेषु रंगेषु स्मरविलासनर्माहवदानरूपेषु कौतुकेषु धीरं निपुणमीति धीरललितधीरोदात्तधीरोद्धतधीरः शान्तभावः श्रीरघुपते रुद्दिष्टो भवति सत्यमिति कारणवस्थत्वेकार्य्यावस्थत्वे च तात्विकमित्यर्थः शिवं मङ्ग**

लात्मकं शान्तमयं क्षोभरहितं शरण्यमाश्रिताभयप्रदं यदाह स्वयमेव 'आर्तो वा यदि वा दृप्तः परेषां शरणागतः । अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना' इति । आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया । विभीषणो वा सुग्रीव ? यदि वा रावणः स्वयम्' इति च । 'सकृदेव प्रपन्नाय' इत्यादि च प्राग्दर्शितं स्फुटमन्यत् ॥५७॥

**कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम् ।**
**कुमारवेद्यं करुणामयन्तं कल्पद्रुमं राममहं भजामि ॥५८॥**

जो कार्य स्वरूप संसार की क्रिया के कारण हैं एवं अप्रमेय यानी गुणरूप ज्ञान आदि के परिच्छेद रहि हैं और सर्वज्ञ हैं सनातन हैं तथा कमल दल के समान दीर्घ एवं उज्ज्वल नेत्रवाले हैं और सनकादि कुमारों के ध्यान द्वारा जाने जाते हैं तथा परम करुणामय हैं एवं कल्पद्रुम यानी सभी प्रकार के साधकों को इच्छानुसार फल प्रदान करनेवाले हैं ऐसे श्रीरामजी का भजन करता हूँ ॥५८॥

कार्येति कार्यं जगत्तस्य क्रियानिर्मितिस्तस्याः कारणं हेतु 'स तपोतप्यत स तपस्तत्वा इदं सर्वमसृजत यदिदं किञ्चेति श्रुतेः । अप्रमेयमपरिच्छेद्यस्वरूपगुणं कुमारवेद्यं सनकादिध्येयं कल्पद्रुमं भक्तमनोरथपूरकं स्फुटमन्यद् ॥५८॥

**त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्दविनाशहेतुम् ।**
**महाबलं वेदनिधिं सुरेशं सनातनं राममहं भजामि ॥५९॥**

जो तीनों लोकों के स्वामी हैं एवं कमल के समान नेत्र वाले हैं तथा दया के समुद्र हैं और संसार के सुख दुःखरूप द्वन्दों को नाश करनेवाले हैं एवं अपरिमित बलवाले हैं तथा वेदों के निधि यानी वेदों के मर्यादाओं का पालन करनेवाले हैं और देवताओं के भी देवता हैं ऐसे सर्वेश्वर श्रीरामचन्द्रजी का मैं भजन करता हूँ ॥५९॥

त्रैलोक्यनाथमिति द्वन्द्वानां शीतोष्णादीनां संसारधर्माणां विनाशहेतुं यद् भक्त्या तन्निवृत्तिरित्यर्थः । महाबलमसंख्येयपराक्रमं यदाह स्वयमेव 'सुदुष्टो वा प्यदुष्टो वा' इत्यादि । वेदनिधिं वेदाश्रयभूतं वेदमर्य्यादाप्रतिपालकं प्रलये तद् रक्षकं वेत्यर्थः । सुरेशं देवदेवं स्फुटमन्यत् ॥५९॥

**वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम् ।**
**अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ॥६०॥**

जो वेदान्त से वेद्य हैं एवं कवि-सर्वज्ञ तथा सभी के नियन्त्रक हैं तथा आदि मध्य और अन्त से रहित हैं और अचिन्त्य हैं एवं आद्य यानी सबके कारण स्वरूप हैं तथैव अगोचर प्राकृत इन्द्रियों से अग्राह्य हैं एवं निर्मल-प्रकृति के मल से रहित हैं और सर्वदा एक रूपसे रहनेवाले हैं तथा 'तमः रूपा प्रकृति से पर नित्य विभूति में विराजमान हैं ऐसे श्रीरामजी को सदा नमन करता हूँ ॥६०॥

वेदान्तेति **सर्वोपनिषत्प्रतिपाद्यमित्यर्थः । निरपेक्षस्वरूपतया श्रीरामतापनी श्रुत्या सहान्येषां छान्दोग्यादीनामेकवाक्यतया उक्तत्वात् यत ईशितारं सर्वेश्वरं 'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् । वदन्ति तद् विरुद्धं यो वदेत् तस्मान्नचाधमः' इति पाद्मात् । अत एवानादिमध्यान्तं आदिमध्यावसानशून्यं आद्यं सर्वेभ्यः पूर्वसिद्धं परम कारणमित्यर्थः । अचिन्त्यं तर्कागोचरं 'नैषातर्केण मतिरापनेय' इति श्रुतेः । किन्तु गुरुपदेशगम्यं 'आचार्यवनान् पुरुषोवेद' इति श्रुतेः । अगोचरं प्राकृतेन्द्रियाग्राह्यं 'न चक्षुषा पश्यति रूपमस्य' इतिश्रुतेः । किं तु भक्तिग्राह्यमेव 'दृश्यते त्वग्रयाबुद्ध्या सुक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः । स्फुटार्थमन्यत् ॥६०॥**

**अशेषवेदात्मकमादिसञ्ज्ञमजं हरिं विष्णुमनन्तमूर्तिम् ।**
**अपारसंवित्सुखमेकरूपं परात्परं राममहं भजामि ॥६१॥**

जो अशेष यानी सम्पूर्ण वेदों से वेदनीय हैं तथा सभी नामों से पूर्व में प्रसिद्ध श्रीरामनामवाले हैं एवं अज हैं अर्थात् जन्मरूप शरीर संयोग से रहित हैं हरि-भक्तों के दुःखों को हरण करनेवाले विष्णुरूप यानी स्वरूप एवं वस्तुओं से सर्वत्र व्यापक हैं और अनन्तमूर्तिवाले हैं एवं पूर्ण ज्ञानानन्द स्वरूपवाले हैं और एक यानी प्रधान श्रीरामजी स्वरूपवाले हैं एवं परात्पर परब्रह्म श्रीरामजी हैं ऐसे श्रीरामजी का मैं सर्वदा भजन करता हूँ ॥६१॥

अशेषेति **अशेषेषु कृत्स्नेषु वेदेष्वात्मा स्वरूपं यस्य तं सर्ववेदवेद्यमित्यर्थः । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रवणात् । वेदमूर्तिकमिति वा 'नमो वेदादिरूपाय ॐ काराय नमोनमः' इति श्रीरामतापिन्यां तद्विशेषणात् । आदिःप्रथमा सर्वेभ्यः पूर्वसिद्धा संज्ञा रामाद्याख्या यस्य तं अजं जन्माख्य विकारशून्यम् उपलक्षणमिदं मत्स्यादीनां पद्मादीनां दशरथाज्जन्मत्वाविर्भावाभिप्रायमित्यदोषः । अनन्तापरिच्छिन्ना मूर्तिर्यस्य तं बहुषु ध्यातृषु यौगपद्येनाविर्भावात् । अपारे पूर्णे संवित्सुखज्ञानानन्दौ यस्य तं पूर्णज्ञानानन्दधर्मकमित्यर्थः । एकं रूपं सदैकरसमित्यर्थः स्फुटम**

न्यत् ॥६१॥

तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसापूरितविश्वमेकम् ।
राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि ॥६२॥

जो सनातन पुराण पुरुष हैं एवं परात्पर तत्त्व स्वरूप हैं और एक यानी प्रधानतया स्थित होकर अपने तेज से इस विश्व को पूरित कर अर्थात् सृष्टि स्थिति एवं संहारक के रूपमे स्थित हैं तथा सूर्यमण्डल में स्थित होकर राजाधिराज के रूपमें सभी को प्रकाशित करते हैं और विश्व के ईश्वर हैं ऐसे श्रीरामजी का भजन करता हूँ ॥६२॥

तत्त्वेति परमार्थभूतं स्वरूपं यस्य तं स्वतेजसा निजप्रभावेन पुरितं विश्वं येन तं नियमितविश्वमित्यर्थः स्फुटमन्यत् ॥६२॥

लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम् ।
अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात् ॥६३॥

जो अत्यन्त सुन्दर शरीर से लोगों को अतिआनन्द प्रदान करनेवाले हैं एवं रघुवंश में श्रेष्ठ हैं तथा सत् चित् एवं आनन्दमय स्वरूप होने से लोगों को अनायास अपनी ओर आकर्षित करनेवाले एवं साधकों को सायुज्यमुक्ति प्रदान करनेवाले हैं और सभी प्रकार के विद्याओं के पति एवं सर्वज्ञ शिरोमणि हैं ऐसे तमोगुण प्रधान प्रकृति से पर विराजमान सर्वेश्वर श्रीरामजी को नमस्कार करता हूँ ॥६३॥

लोकाभिराममिति मुकुन्दं मुक्तिदातारम् । अशेषेति सर्वविद्याप्रवर्तकमित्यर्थः । यदुक्तं 'गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः' इति कवीन्द्रं सर्वज्ञचूडामणिं स्फुटमन्यत् ॥६३॥

योगीन्द्रसंघैः शतसेव्यमानं नारायणं निर्मलमादिदेवम् ।
नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात् ॥६४॥

जो योगेश्वरों के समूहों से अनेक प्रकारों से समाराधित हैं एवं महासमुद्र में शयन करनेवाले निर्मल स्वरूप आदि देव हैं जगत् के एकमात्र आधार हैं तथा तम से पर स्थित आदित्य के समान तेजवाले हैं ऐसे सर्वाधार श्रीरामचन्द्रजी को नित्य नमस्कार करता हूँ ॥६४॥

योगीन्द्रेति शतेन प्रकारेण सेव्यमानं यद्यपि सेव्यमानपदं शतशब्दं समस्तं

तथापि योगीन्द्रसंघैरित्यनेन सम्बन्धमाकांक्षति 'समस्तस्यासमस्तेन नित्याकांक्षेण संगतः' इत्युक्तेः। आदिदेवं सर्वेषां देवानामादिभूतं इदृशं रामं नित्यं नतोऽस्मि ॥६४॥

**विभूतिदं विश्वसृजं विराजं राजेन्द्रमीशं रघुवंशनाथम् ।**
**अचिन्त्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं राममहं भजामि ॥६५॥**

जो साधकों के इच्छानुसार ऐश्वर्य प्रदान करनेवाले हैं एवं विश्व की सृष्टि करने वाले तथा विराज यानी चित् एवं अचित् के अपेक्षया अन्तर्यामीरूप से प्रकाशमान हैं और ब्रह्मादि देवों को भी नियमन करनेवाले हैं राजराजेश्वर हैं तथा रघुवंश के नाथ पालक हैं एवं अचिन्त्य अव्यक्त तथा अनन्त मूर्ति स्वरूप और दिव्य ज्योतिमय हैं ऐसे श्रीरामचन्द्रजी का मैं भजन सर्वदा चिन्तन करता हूँ ॥६५॥

विभूतिदमिति **कर्मानुरूपफलप्रदमित्यर्थः । विश्वसृजं जगन्निमित्तं कारणं विराजं विराडन्तर्यामिणं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिश्रुतेः । विशेषेण राजमान मिति वा यतो राजेन्द्रमव्यक्तं प्राकृतेन्द्रियाग्राह्यं ज्योतिर्मयं स्वप्रकाशरूपं स्फुट मन्यत् ॥६५॥**

**अशेषसंसारविकारहीनमादिस्तुसंपूर्णसुखाभिरामम् ।**
**समस्तसाक्षीतमसः परस्तान्नारायणं विष्णुमहं भजामि ॥६६॥**

जो संसार के समस्त विकारों से हीन हैं एवं सवों से आदि कारण हैं और सम्पूर्ण सुखों के अधिकरण या सभी सुखों में रमण करनेवाले दिव्य स्वरूपवाले तथा समस्त जडचेतनवर्ग के साक्षीरूप होते हुये भी तम यानी सूक्ष्म प्रकृति से भी परतया विद्यमान आर्थात् नित्य विभूति में रमणशील एवं नारायण यानी क्षीरसागर में निवास करते हुये सृष्टि करनेवाले ऐसे विष्णु सर्वव्यापक श्रीरामचन्द्रजी का मैं भजन करता हूँ ॥६॥

अशेषेति **जन्मादिविकारैः सांसारिकैः धर्मैः रहितं यत आदिः सर्वेभ्यः पूर्व-सिद्धं परमकारणमिति यावत् । अत्राम् विभक्तेः सुरादेशः सुपां सुलुक् पूर्वसवर्णा च्छेया डाड्यायाजाल इति प्राणिनिस्मृतेः । आदि सुसम्पूर्णसुखाभिराममिति पाठे सुगमं सम्पूर्णेन सुखेनाभिरामं बहुविवित्रनृत्यगीतादिविशिष्टश्रृङ्गारनन्दसुन्दरमित्यर्थः । न चेतृशस्येतरानवधानमित्याह समस्तसाक्षीति पूर्ववदमः सुरादेशः शिष्टं स्पष्टम् ॥६६॥**

**मुनीन्द्रगुह्यं परिपूर्णमेकं कलानिधिं कल्मषनाशहेतुम् ।**
**परात्परं यत्परमं पवित्रं नमामि रामं महतोमहान्तम् ॥६७॥**

जो सदा साधन परायण मुनिजनों से भी गोपनीय एवं स्वतः परिपूर्ण स्वरूप तथा एक अद्वितीय स्थितिवाले है और कलाओं के खजाने हैं तथा सभी प्रकार के कल्मषों के नाशका कारणभूत हैं एवं परात्पर यानी पररूप से प्रसिद्ध श्रीविष्णु ब्रह्मा कृष्ण नारायण शंकर आदि से पर सभी के कारणरूप से विद्यमान हैं इसी तत्त्व को वशिष्ठ संहीता भी स्पष्ट करती है-

**'परान्नारायणाच्चैव कृष्णात्परतरात्तथा ।**
**यो वै परतमो श्रीमान् रामोदाशरथिस्वराट्'**

यानी पर रूप से प्रसिद्ध श्रीनारायण से श्रीकृष्ण परतर हैं उनसे भी स्वतः प्रकाशमान दशरथनन्दन श्रीराम परतम हैं। एवं जो स्मरण मात्र से अविद्यादि समस्त मलों को नाश करनेवाले परम पवित्र हैं तथा आकाश आदि महान् परिणाम वालों से भी परम महान् हैं ऐसे सर्वेश श्रीरामजी को सदा नमन करता हूँ ॥६७॥

मुनीन्द्रेति । **मुनीश्वराणामपि गुह्यं रहस्यरूपमित्यर्थः । कलानिधिं चतुःषष्टि कलाधारं तास्वतिप्रवीणं कलानिजांशास्तासाम् आश्रयभूतं यतः पूर्णं स्वयं रूप मिति वा कल्मषनाशहेतुमिति कुतस्तत्राह यत्परमं पवित्रं परात्परमिति सर्वोत्कृष्टं परमं पवित्रं स्मृतमात्रं सद्विद्यापर्यन्तं मलं यद् वस्तु निरस्यति तदात्मकमित्यर्थः । महतोऽपि दिगाकाशादेः पदार्थान् महान्तं परममहत्वगुणकमित्यर्थः । 'सभूमिं सर्वतः स्पृत्वा अत्यतिष्ठद् दशांगुलम्' इति पुरुषसूक्तात् । भूमिमित्युपलक्षणं प्रकृत्यादीनां तत्वानाम् ॥६७॥**

**ब्रह्माविष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।**
**आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ? ॥६८॥**

हे रघुनन्दन ! रघुवंशियों या शरणापन्न जीवों को आनन्द प्रदान करनेवाले श्रीराम जी ! ब्रह्मा विष्णु एवं शंकर तथा इन्द्र और अन्य देवता एवं सूर्य आदि ग्रह भी आपही हैं यानी ये आपके शेषभूत आज्ञा वशवर्ति हैं स्वतन्त्र कोई भी नहीं है ॥६८॥

**एवं माधुर्यैश्वर्यादिगुणवैशिष्ट्येन श्रीरामं स्तुत्वेदानीं स्वेतरनिखिलवैशिष्ट्ये नाद्वितीयत्वं निरूपयन् स्तौति ब्रह्माविष्णुरिति । ब्रह्मा चतुर्मुखो जगत्स्त्रष्टा, विष्णुः**

क्षीराब्धिपतिर्जगत्पालकः रुद्रश्च तत्संहर्त्ता, देवेन्द्रः शचीपतिः देवताद्यादयः आदित्यादयश्च नवग्रहाः एते सर्वे त्वद्विशेषणभूतास्त्वद् विशिष्टास्त्वत्तो नातिरिच्यन्ते नहि दण्डिनः, पुरुषादस्ति दण्डस्य भेदः दण्डकोटिप्रविष्टत्वात्, । विशेषणविशेष्ययोर्दण्डपुरुषयोः स्वरूपधर्मकृतो भेदस्तु न निवार्यते ॥६८॥

**तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा ।**

**विप्रा वेदास्तथा यज्ञाः पुराणं धर्मसंहिताः ॥६९॥**

हे रघुनन्दनजी ! सदा तपस्या में रत साधकजन एवं तत्त्वदर्शी श्रीवशिष्ठ तथा श्रीविश्वामित्र प्रभृति ऋषिगण और कपिल आदि सिद्ध जन तथा साध्य योनि देवगण एवं उनपचास मरुतगण तथा यज्ञों के अनुष्ठाता निप्र और ऋक् यजु साम एवं अथर्व वेद एवं ज्योतिष्टोम प्रभृति यज्ञ और अठारह पुराण तथा वशिष्ठ पराशर प्रभृति धर्मसंहिताओं का स्वरूप भी आप ही हैं ॥६९॥

तापसा इति तपस्विनः ऋषयो दुर्वासा विश्वामित्रप्रमुखाः सिद्धाः साध्याश्च तत्तत् संज्ञका मरुतो देवाः विप्रा यज्ञानुष्ठातारः वेदा यज्ञाविधानाः यज्ञा ज्योतिष्टोमादयः पुराणं श्रीविष्णुपुराणादिधर्मसंहिता वशिष्ठादिस्मृतयः ॥६९॥

**वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च ।**

**यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादिभिः ॥७०॥**

**सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव ? ।**

**बसवोऽष्टौ त्रयः काला रुद्रा एकादशस्मृताः ॥७१॥**

हे रघुपुंगव ! रघुकुल में श्रेष्ठ श्रीरामजी ! ब्राह्मण क्षत्रिय वैश्य एवं शूद्र ये चार वर्ण तथा ब्रह्मचर्य गृहस्थ वानप्रस्थ एवं संन्यास ये चार आश्रम और ब्राह्मणधर्म क्षत्रिय धर्म वैश्यधर्म एवं शूद्रधर्म तथा यक्ष राक्षस एवं गन्धर्व दिक्पाल इन्द्रादि दश देवता तथा दिशाओं के गजों और सनक सनन्दन सनातन एवं सनत्कुमार प्रभृति श्रेष्ठ मुनिगण और धर, ध्रुव, सोम, विष्णु, अनिल, अनल, प्रत्यूष एवं प्रभास, आठवसु तथा भूत भविष्य और वर्तमान तीन काल और अज, एकपाद अहिवघ्न पिनाकी, अपराजित, त्र्यम्बक, महेश्वर, वृषाकपि शम्भु हरण एवं ईश्वररूप ग्यारह रुद्र इन सभी के तत् तत् स्वरूप में आप ही विराजमान हैं ॥७०-७१॥

